संहितायामन्यत्रान्यत्र चैवं श्रुतम् । तद्यथा ऋ० १०. २. ७—
"पन्थामनु प्र विद्वान् पितृयाणं द्युमदग्ने समिधानो वि भाहि"

हे 'अग्ने !' 'पितृयाणं विद्वान्' त्वं 'समिधानः' सन् 'द्युमत्' यथा स्यात् तथा 'प्रविभाहि' इति तत्संक्षेपार्थः । एतेनाग्निशिखानां पितृयानगामित्वम्, तदनु अनुष्ठितयागानां त्यक्तपार्थिवदेहानाञ्चेति ध्वनितम् ॥

श्रुतं हि तैत्तिरीयब्राह्मणे— "एकं वा एतद् देवानामहः यत् संवत्सरः"—इति (३. ९. २२. २.)। अप्येतन्मूलकं स्यादेतन्मनुवचनम् (१. ६७.)—

"दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद् दक्षिणायनम्"—इति ।

तदेवमादिवचनानि तूपपद्यन्ते सुमेरावेवेत्यतः स एव देवलोको मन्तव्यः । अत एव महाभारतीयवनपर्वणि—

"उदीचीं दीपयन्नेष दिशं तिष्ठति वीर्यवान् ।
महामेरुर्महाभागः शिवो ब्रह्मविदां गतिः"

—इत्यादिकथा च वर्णिता (१६३अ० १२श्लो०)।

तानीमान्येव वचनान्यवलम्ब्य प्रथमं सुमेरोर्देवनिलयत्वं सर्वसम्मतमिति प्रमाणयितुं चेष्टितं तेन, ततस्तत्रार्यपितृपुरुषाणां वास आसीदित्यत एव देवनिलयत्वेन स मेरुर्वर्णित इति सिद्धान्तितं निराबाधमिवेति ।

अहो बत ! तस्यैष सिद्धान्तोऽपि दरिद्राणां मनोरथ इवैव प्रतिभात्यस्माकम् । न हि श्रुत्युक्तस्य देवानामित्यस्य सुमेरुवासिनामित्यर्थावगतौ किञ्चिन्मानमस्ति; अस्ति च ततोऽन्यत्र । मनुसंहितायान्तु अस्मत्संवत्सरकालमितं भवति देवाना

महर्षिरित्युल्लिखित मिति तु सत्यम्, परं न तत्र सुमेरोर्गम्यो:ऽप्यस्तीत्यपि नासत्यम्। एवं महाभारतादौ सुमेरुवासिनां देवत्वं वर्णित मिति च सत्यम्, पर मिहापि न तेषां देवानां मासर्त्त्वयनवत्सरमानान्यभिहितानीत्यपि नासत्यम्। ज्ञातव्यानि तु सुमेरुप्रदेशीयदेवशब्दवाच्यानां तानि च भवन्ति कथम्भूतानि? आयु:परिमाणञ्च तेषां तदब्दमानतो भवति कीदृश मित्यपि ज्ञेय मेव। अप्येवं "शतायुर्वै पुरुष:"—इत्यादिश्रुतिसिद्धं शतायुष्ट्वं तत्प्रदेशवासिनां तद्देशीयाब्दमानेनैव भवति चेत् कथं न तत्र श्रुतिविरोध: सम्पद्यते? वेदेषु हि यच्छ्रूयते मानवानां पूर्णायु: शतवर्षाणीति तन्नून मस्मद्देशीयाहोरात्रमानत एवेति सर्व मेवैतच्चिन्त्य मेव। किञ्च यथा सुमेरुप्रदेशेषु "दैवे रात्र्यहनी वर्षम्"—इति मनुवचन मुपपद्यते, तथैव कुमेरावपि किं नोपपद्यते इत्यपि विचार्यम्। विचारितेषु चैतेषु सुमेरोराद्यार्यावासत्वनिर्णयाय तेन प्रदर्शितं प्रमाणपारायणं कुतो न जलमध्यगतलवणचोदवद् विलीयेतेत्यपि ध्येयम्।

महाभारतादौ यद् वर्णितं सुमेरोर्देवलोकत्वम्, तत्त्वापेक्षिक मिति चेह वर्णयिष्याम एवाष्टमे। वस्तुतो यथेह सौरजगति भूलोकान्तरिक्षलोकद्युलोकविभागास्तथैवास्मच्छरीरेष्वपि मन्यन्त एव शारीरविद्भिरस्मद्देशीयै:। एव मग्निवायुसूर्यज्योतिषां प्रधानतो भूरादीनि स्थानानीति स्वीकारकारिणोऽपि वय मिहैकत्र भुव्येव किं तेषां विद्यमानतां न स्वीकुर्महे? भुवि तेषा मस्तित्वस्य कथा तु दूरे आस्ताम्, भौमपदार्थेष्वस्मच्छरीरादिषु च सर्वत्रैव तेषां त्रयाणा मेव देवानां सत्ता स्वीकुर्महे एव। तदेवं यथास्य सौरजगत ऊर्द्ध्वभागे स्वर्गस्थिति: स्वीक्रियते, तथैवास्यां पृथिव्या मपि

वङ्गादिदेशत ऊर्द्ध्वस्थाः काश्मीरादयो वङ्गादिदेशीयानां स्वर्गाः, तत ऊर्द्ध्वस्थाः कैलास-गन्धमादन-रावणह्रद-मानससरोवरादयः काश्मीरीयादीना मपि स्वर्गाः, ततोऽपि ऊर्द्ध्वस्थाः सुवीर्यादिप्रदेशाः शान्त-पितृवर्गादयश्च रावणह्रदादिवासिना मपि स्वर्गाः, तेभ्योऽप्यूर्द्ध्वतनः सुमेरुप्रदेशस्तु सर्वभूवासिनां स्वर्ग एवेत्यत्र कः संशयः। अपि हि पृथिव्या उत्तरकेन्द्रस्योपरिभागे ध्रुवस्य संस्थानदर्शनात् तत्केन्द्र-भागस्योर्द्ध्वत्वम्, तत एव तस्योत्तर इति व्यपदेशश्चेति सिद्धान्तः सर्ववैदिकसम्मतः। अत एव महाभारते उदीच्यां देवनिलयो वर्णितः, अपाच्यां यमनिलयश्च, एव मन्यत्रान्यत्र च। तदित्थं सुमेरुप्रदेशस्य तस्य स्वीकृतेऽप्यापेक्षिकदेवनिकेतनत्वे न सिध्यति तत्राद्यार्यावास इति ध्रुवम्॥

यदपि स्वमतपोषिकेत्युद्धृता मत्कृता सामटीप्पन्येका तेना-युष्मता, तदपि तथैव। पश्यतु तावत्,—अस्ति सामोत्तरा-मन्त्रः "समानो अध्वा स्वस्रोः"-इति (सा० स० ८. ३. १४. ३.), श्रुतश्चात्र 'सुमेके'-इति पदम्; विवरणकृन्माधवाचार्येण तद्व्याख्या-यां 'संवत्सरे दक्षिणायने रात्रेर्वृद्धिः, उत्तरायणे त्वह्नः'-इत्य-लेखि, मयैषैव पङ्क्तिस्तत्र स्वकीयटीप्पन्यां प्रकाशिता। सुमेरु-प्रदेशवासिना मेव दक्षिणायने प्रसरति रात्रिः, उत्तरायणे च तथा दिन मिति तद्वर्णनपरैवैषा ऋगित्याह स श्रीमान् वालगङ्गाधरः। तत्त्वतस्त्वेतदार्यावर्त्तीययोरेवाहोरात्रमानयोर्वर्द्धनकालप्रकाशने एव तस्याः पङ्क्तेस्तात्पर्यम्; दक्षिणायने हि वर्द्धत एवेह रात्रिमानम्, तथोत्तरायणे च दिवामान मिति। किञ्चात्रैव मन्त्रे यच्छ्रूयते 'समानो अध्वा स्वस्रोः'-इति, भगिनीरूपयोः रात्रुषसोः सञ्चर-मार्ग एक एव, येनाकाशमार्गेणोषा निर्गच्छति तेनैव रात्रिरपीति

तदथ:। तदेव मिदं स्वप्नदृष्टाश्रुतपूर्वैरत्नोद्धरणाय वेदावेस्ताद्दि-
जलधिप्लवमानस्याश्रयहीनस्य तस्य कुशकाशावलम्बनं सर्वथा
निरर्थक मेवेति किमु तत्रास्ति शोच्य मिति दिक् ॥

अथैवम् "अनु प्रत्नस्यौकसो हुवे (१. ३०. ९.)"—इत्यादि-
श्रुतिगम्य मार्याणां प्रत्नौकस्त्वं कतमस्य प्रदेशस्य स्याभ्मन्तव्य मिति
चेत्, अत्रोत्तरन्तु "स चार्यावास: पूर्वं तावत् हिमवत्पृष्ठस्य दक्षिण-
भागे सुवास्तुप्रदेशे एवासीत्"–इत्यादिनोक्त मिवैव द्रष्टव्यम् (२२पृ०
१८पं०)। अपि "अनु प्रत्नस्यौकसो हुवे"–इत्यृक्श्रवणमात्रेण किं
सर्वेषा मेवार्याणा मादिवासोऽन्यत्र क्वचिदासीदित्यनुमानं स्यात्
सङ्गतम्, कि मु स्यात् तन्मन्त्रद्रष्टुरेवेति च विवेच्यम्। अस्मा-
भिस्तूक्तं पुरस्तात् 'जह्नवप्रदेशस्य पुराणौकस्त्वाम्नान मिदं व्यक्तिगतं
न तु सार्वजनीन मिति च वेदितव्य मिति (२५ पृ० २३पं०)।
तथा चास्य मन्त्रस्य द्रष्टु: शुन:शेपस्यैव पूर्वावास आसीद् जाह्नव्या
मूले जह्नूनाञ्चाधिपत्ये (ऐ० ब्रा० ७.३. ६.) जह्नुमुन्याश्रम-
कान्तारे; तत एव हरिश्चन्द्रपुत्रो रोहित: तं क्रीत्वा सारस्वतप्रदेश
मानीतवान्। तच्चाख्यान मैतरेयके ७. ३. १—६ श्रुतम्।
जह्नोस्तदाश्रमारण्यं त्वद्यापि जाह्नवप्रदेश इति गङ्गाप्रभवे हिम-
वत्पृष्ठे प्रसिद्धम्। तत एव जाह्नवप्रदेशात् गङ्गाया: प्रकाशदर्श-
नाद् गङ्गायाश्चापरं नाम जाह्नवीति। तदित्थम् "अनु
प्रत्नस्यौकसो हुवे"–इति श्रुति: सिद्धान्तपक्षेऽपि सुसङ्गच्छत एव।

अपिवा हिमवत्पृष्ठस्यौकोनामनदीतीरभूमय एव प्रत्नौकस:;
तत्र चासीत् केषाञ्चिदार्याणां पुरा वास इत्यपि सुवच मिति ॥

इदानीं सैषार्यावर्त्तभूमि: पश्चिमत उत्तरतश्च क्रमात् सङ्कुचिता
दक्षिणस्यामाय: पूर्ववदेव, पूर्वस्यान्तु बहुप्रबिङ्गतेत्युत्कल-राढ़-

गौड़-वङ्ग-नरक-प्रदेशा अप्यद्यार्यावर्त्तान्तर्गताः पुण्यभूमय एव गण्यन्ते ; अतोऽत्रत्यवाङ्गाद्याश्चाद्य यूरोपादीनां म्लेच्छदेशत्वं मत्वा तत्र गन्तुं न हृदयेनोत्सहन्ते ! कालो हि बलवत्तर इति ॥

अथाद्य प्रसङ्गत इद मप्यत्र वक्तव्य मस्ति,— वैदिककाल-विदितार्यावर्त्तीयार्यानार्यमात्राणां शिक्षणाद्याभ्युदयिकार्थ मेवैषा त्रयी विद्या प्रादुर्भूता, न त्वन्यदेशीयानाम् ; अत्रैतद्देशीयनगनगर-नदीग्रामसीममात्राणां वर्णनश्रुतेः । यदि हि सर्वदेशीयमानवानां हितार्थैवैषोपदिष्टा स्यात् , तर्हि नून मिह सर्वदेशीयभूधरादीना मप्युल्लेखो दृश्येतेति । किञ्च यदि पार्थिवसर्वदेशार्थैवैषेति स्यान्मन्त-व्या, तर्हि मङ्गलादिसर्वग्रहोपग्रहस्थितजीवाद्यर्थताप्यस्याः किं न मन्तव्या ? अपि नाम, यथास्य सौरजगतो हितार्थताऽस्यास्त्रयी-विद्यायाः , किन्न तथा ऽपरेषा मपि अनन्तसौरजगता मिति च भवेद्ध्येयम् । अत इदं पुनर्ब्रूमः— वैदिककालिका-र्यावर्त्तप्रभववंशीया आर्या आपन्नार्यभावाश्च येऽस्मिन्नार्यावर्त्ते वा दाक्षिणात्ये वान्यत्रान्यत्र वा यत्र कुत्रचिदासते , तेषा मेव सर्वेषा मैहिकामुष्मिकाभ्युदयार्थैवैषा त्रयी विद्या, नान्यार्थेति । सूचित-ञ्चैतदिह ( १७ पृ० १७पं० ) पुरस्तादपीति सङ्क्षेपः ॥

अथ प्रकृत मनुसरामः । एतस्मिन्नेवार्यावर्त्तेऽस्यैतरेयस्यासीद् वास इति स्वीकृतेऽपि, तदानीन्तनार्यावर्त्तस्वरूपेऽभिज्ञातेऽपि, कतम-स्मिन् प्रदेशे स उवासेति निर्णयोऽसम्भव इव प्रतिभात्यस्माकम् ; वक्ष्यमाणप्रकारेणास्य पाणिनियास्कादिभ्योऽतिप्राचीनत्वनिर्णयात् । एव मपि तत्र कृतेऽतियत्नेऽवगम्यते स्यादैरावतीतटसन्निहिते क्वचित् प्रदेशे इति । श्रुतं ह्यत्रैकत्र ऐरावतीपारदृष्टान्तः— "यथा सैरावतीं नावं पारकामाः समारोहेयुः"—इति (६, ४. ५.) । इह 'सा' इति

द्वितीयैकवचनस्य सौ रूपम्, ता मित्यर्थः। सायणेन तु सैरावती मित्येकं पदं नाव मित्यस्य विशेषणं कृतम्, समुद्र मित्यध्याहृतञ्च। तन्न रोचतेऽस्मभ्यम्; अकृतेऽध्याहारेऽपि सम्पन्नेऽर्थेऽध्याहारस्यानौचित्यात्, समुद्रस्यैवं सर्वदैव नावा तरणं सर्वदेशीयानां सर्वेषा मनुपलम्भाद् दृष्टान्तयोग्यत्वाभावाच्चेति। सैषा नदी संहिताकाले परुष्णीति प्रसिद्धासीत्, तदुक्तं निरुक्तकारेण "इमं मे गङ्गे"-इति मन्त्रस्य व्याख्यानावसरे "इरावतीं परुष्णीत्याहुः"-इति (९. ३. ५.)। तदेव मत्वैवार्यावर्त्ते इरावत्या नद्याः सन्निधौ कस्मिंश्चिज्जनपदे स विरराज महिदास ऐतरेय इति सिद्धम्॥

---

( ४ )

अथ कः कालोऽस्यैतरेयस्येति विचार्यम्। श्रूयते हि ऋक्संहितायां चतुर्दशर्चं सूक्त मिदम्— "प्रैते वदन्तु प्र वयं वदामः"-इति (१०.९४. १—१४.)। तदिदं सर्वचरुनामजनपदे अर्बुदनामर्षिणा दृष्टम्। तदाहैतरेयः— "देवा ह वै सर्वचरौ सत्रं निषेदुः, ते ह पाप्मानं नापजघ्निरे। तान् होवाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृत्"-इति (६. १. १.)। तस्मिन् सर्वचरौ अर्बुदोदासर्पणी, नामैका प्रपदासीत्। प्रपद्=जलप्रपातो निर्झरो वा। ऐतरेयकालेऽपि सा प्रपदासीत् प्रसिद्धा। तदुक्तं तदुत्तरम्— "तद्याप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति"-इति। सैषा प्रपत् यास्ककालात् पुरैवाभवद् विलुप्तेति गम्यते, अन्यथा तदानीन्तनं तन्नाम निरुच्येतैव तेन, यथा विपाशः। तथाहि— "आर्जीकीये शृणोह्या सुषोमया"

-इति (ऋ० सं० १०. ७५. ६.) ऋगंशव्याख्यावसरे निरुक्तं तेन— "आर्जीकीयां विपाडित्याहुः ०—० पूर्वं मासीदुरुञ्जिरा"—इति (निरु० ६. ३. ५.)। तदेवम्, यास्कसमये या नदी विपाडिति प्रसिद्धा, सैवासीत् तन्मन्त्रकाले आर्जीकीया, ततः पुरा उरुञ्जिरेति च व्यक्तम्। एव मेकस्या एव नद्याः कालभेदात् त्रिधा प्रसिद्धिर्दर्शिता; नात्र तथा अर्बुदोदासर्पण्यास्तात्कालिकं नामादिकं किमप्युक्तम्; इतोऽवगम्यते ततः पुरैव सा विलुप्ता, विभिन्ननामहेतुतोऽपरिचेया वाभूदिति। तथा चाय मैतरेयो निरुक्तकृतोऽस्माद् यास्कात् पूर्वतनः। उपलभ्यते चेत ऐतरेयतोऽपि बहूनि वचनान्युद्धृतानि यास्केनेति। तद्यथा— "यस्यै देवतायै हविर्गृहीतं स्यात् तं मनसा ध्यायेत् वषट् करिष्यन्निति ह विज्ञायते"—इति निरु० ८. ३. ७; एतत्त्वाम्नात मैतरेये ३. १. ८।

भगवता पाणिनिमुनिना यश्चाय मितराशब्दः शुभ्रादिगणे पठितः (४. १. ११३.), यतः सम्पद्यते इतराया अपत्यं पुमानैतरेय इति; गणकारश्च पाणिनिरेवेति ध्वनितं पूर्वापरावरेतिसूत्रभाष्ये; अतोऽवगम्यते अय मैतरेयः पाणिनितोऽपि पूर्वतन इति। अपि नडादिगणे (पा० सू० ३. १. ६६.) आश्वलायनशब्दमूलस्य अश्वलशब्दस्य पाठाच्चावगम्यते तदेव; आश्वलायनाच्चायं पूर्वतनइतिसिद्धान्तात्। सूचितञ्चैतत् "छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ् ञ्यः"—इति (पा० ४. ३. १२६.)। अनेनैव सूत्रेण छन्दोगानां धर्म्मं आम्नायो वेत्यर्थे सिध्यति छान्दोग्य मिति पदम्; तथा च छान्दोग्यात् परभवत्वं पाणिनेर्नूनं मन्तव्यम्, श्रूयते च तत्र छान्दोग्ये "तद्विद्वानाह महीदास ऐतरेयः"—इति (५. १६. ७.)। इतोऽप्यसन्दिग्ध मस्य पाणिनिपूर्वजत्वम्।

कल्पकृदाश्वलायनोऽपि नून मेतस्मादैतरेयात् परतनः ; तत्र बहुत्र ऐतरेयनामस्मृतेः। तद्यथा —"अन्तरेण हविषी विष्णु मुपांश्वैतरेयिणः"—इति आश्व० श्रौ० सू० १. ३. १२. पुनः ३. ६. ३, १०. १. १३ इत्यादीनि च।

पञ्चशाकलशाखाप्रवक्तृभ्यः शिशिराद्याश्वलायनान्तेभ्यः पञ्चभ्य-स्राय मैतरेयः पूर्वतनः ; इहोद्धृतमन्त्राणां तत्रादर्शनात्। तदिद मनुपदं प्रतिपादयिष्यामः शाखाविचारप्रसङ्गे ।

एतेन यत् सिद्धान्तितं केनचित् पाश्चात्येन विदुषा—"इहैतरेये 'पारिक्षितस्य जनमेजयस्य'—इति—( ७. ५. १. )-श्रवणात् स्यादय मैतरेयो जनमेजयाच्च राज्ञः परभवः"—इति, तन्नून मपास्तम्। वस्तुत एतन्नामश्रुतित एव अर्जुनपौत्रस्य परिक्षिन्नाम बभूव, बभूव च तथा तत्पुत्रनाम जनमेजय इत्येव स्यात् सर्वसाममञ्जस्य मिति।

अथ यदत्र श्रूयते ( ३. ४. ५. )—

"तदेषाभियज्ञगाथा गीयते—

यदस्य पूर्व मपरं तदस्य यद्वस्यापरं तद्वस्य पूर्वम्।

अहेरिव सर्पणं शाकलस्य न विजानन्ति यतरत् परस्तादिति" —इति। तदेतेनास्य शाकलाचार्यात् परभवत्वं स्पष्टम्। एष च शाकलः शकलस्यानन्तरापत्यं नूनम्; गोत्रे तु "गर्गा-दिभ्यो यञ् ( पा० ४. १. १०५ )"—इत्येतेनैव भाव्यम्, तथाच सम्पद्यते शकलस्य गोत्रापत्यं पुमान् शाकल्य इति। मुद्रिते ऐतरेयारण्यकभाष्ये ( ३. २. १. ) यद् दृश्यते 'शकलस्य पुत्रः शाकल्यः'—इति, तत्स्यात् गोत्रविवक्षयैव ; अनन्तरापत्यविवक्षया यञोऽप्रवृत्तेः। अपि वा मुद्राशोधकप्रमादत एव तत्र तथा पाठः सम्पन्नः ; 'शकलस्य पौत्रः'—इति, 'शाकलस्य पुत्रः'—इति, 'शाक-

लस्य गोत्रः'—इति वा स्यात् तत्रत्यपाठो विशुद्धः। ये तु शाकल्य-शिष्याः शिशिरादयः, ते चासन् शाकला एवोच्यमानाः; छात्रेऽपि विवक्षिते "गोत्रे लुगचि"—इति (पा० ४. १. ८९.) गोत्रप्रत्ययस्य यञो लुग्विधानात्। परं नात्र यज्ञगाथायां तेषा मन्यतमस्य नामग्रहणं सम्भाव्यते; कथं हि स्यादैतरेयतोऽतिप्राचीनगाथायाम् ऐतरेयोत्तरभवस्य शाकलस्य नामश्रवण मिति। तेषा मैतरेयपर-भवत्वं त्विहैवोपरिष्टादुपपादयिष्यामः।

"अपत्यं पौत्रप्रभृति गोत्रम्"—इति (४. १. १६२.) पाणि-न्युपदेशात् शकलस्य गोत्रापत्यत्वं तु शकलपौत्रस्य, शकलप्रपौत्रस्य, शकलाच्छततमाधिकपुरुषस्य च स्वीकार्य मेव; तदेवं शकलगोत्र इति विवक्षिताः सर्व एव पुरुषाः शाकल्य इत्याख्याता भवन्ति। अत एव बह्वृक्प्रातिशाख्ये 'शाकल्यस्य'—इत्येतन्मात्रोक्तितः प्रसि-द्धस्य पदकारस्यैव शाकल्यस्य बोधः स्यादिति क्वचित् 'स्थविरस्य शाकल्यस्य'—इत्युक्तम् (१अ० २प० ९व०), क्वचित् (१. ४. १.) 'शाकल्यपितुः'—इत्युक्तम्, क्वचिन्निर्विशेषणञ्च 'व्याड़िशाकल्य-गार्ग्याः'—इति (३. १. ३.)। तदत्र व्याड़िशाकल्यगार्ग्या इत्य-त्रातिप्रसिद्धस्य पदकारस्य शाकल्यस्य ग्रहणं भवति, शाकल्यपिते-त्युक्त्या चास्यैव ग्रहण मिष्यते, स्थविरविशेषणविशिष्टस्तु ततोऽपि प्राचीनः कश्चिद् बुध्यते। एवं यत् श्रूयते शतपथब्राह्मणे—"अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति"—इत्यादि (१४. ६. ९. १.), सोऽयं याज्ञवल्क्यसमसामयिकः शाकल्योऽन्य एव। अद्यप्रचलितायाः शाकलान्यतमाया आश्वलायन्याः शाखायाः प्रवक्तुराश्वलायनस्याचार्यश्चाभवदपरः शाकल्यः। त इमे सर्व एव शाकल्याः प्रदर्शितगाथाम्नातशाकल्यात् परतनाः प्रतीयन्ते।

तत्र स्थविरात् शाकल्यात्, विशेषणशून्यात् शाकल्याच्च नून मयं परभवः; एतदारण्यके तदुभयोरेव नामश्रवणात्। तथाहि—"अथ शाकल्यस्य"–इत्यादि ३आ० १अ० २ख०, ततः "प्राणो वंश इति स्थविरः शाकल्यः ३आ० २अ० १ख०"–इति। किञ्चात्रैवारण्यके (३. १. ३.) श्रूयते—"पृथिव्यायतनं निर्भुजम्, दिव्यायतनं प्रतृणम्, अन्तरिक्षायतन मुभय मन्तरेण"–इति, ततस्तन्निर्भुजादिस्वरूपबोधनाय च श्रुत मिदम्—"यद्धि सन्धिं विवर्त्तयति, तन्निर्भुजस्य रूपम्; अथ यच्छुद्धे अक्षरे अभिव्याहरति, तत् प्रतृणस्य; अग्र उ एवोभय मन्तरेणोभयं व्याप्तं भवति"–इति। 'निर्भुजशब्दः संहितावाची, प्रतृणशब्दः पदवाची, उभयमन्तरेणेत्यनेन क्रमो विवक्ष्यते'–इति चाह तद्भाष्ये सायणः। तदेवं पदपाठप्रादुर्भावात् क्रमपाठप्रादुर्भावाच्च परतनोऽय मत्र कोऽस्ति संशयः। पदकारस्त्वेकः शाकल्य एव। तथाहि "वने न वायो"-इति निगमव्याख्यानावसरे निर्णीत मिदं भगवता यास्केन—"वेति च य इति च चकार शाकल्यः"–इत्यादि (६. ५. ५.)। क्रमप्रवक्ता त्वभवद् 'बाभ्रव्यः'। तथाहि बह्वृक्प्रातिशाख्यम्—"इति प्र-बाभ्रव्य उवाच च क्रमम्"–इति (२अ० ५प० ६व० २श्लो०)।

तदित्थ मेष महिदास ऐतरेयोऽस्यप्रचलितशाखाप्रवक्तुः शाकलाश्वलायनस्याचार्यात् शाकल्यात् प्राक्तनोऽपि पदसंहिताप्रवक्तुः शाकल्यात् परतनः; अपीह (७. २. ११.) यदिदं श्रूयते—"पूर्वां पौर्णमासी मुपवसेदिति पैङ्ग्य मुत्तरा मिति कौषीतकम्"–इति, तदाभ्यां पैङ्ग्यकौषीतकाभ्या मपि परभव इति च सिद्धम्॥

( ५ )

अथेदानीं विचार्यं मस्ति, कीदृशान्यासन् तदानीन्तनाचार-व्यवहारविज्ञानानीति । तत्र प्रथमं तावत् तेषा माचारानालोचयितुं प्रवृत्ता वयं बहूना माचारपार्थक्यानां मूलं जातिपार्थक्य मुपलभामहे, अतस्तज्जातिपार्थक्य मेव प्रथमं समासतो वर्णयामः—

यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातयो निसर्गजा इति आकृतिग्रहणा भवन्ति, न तथा ब्राह्मणत्वादयः ; ब्राह्मणत्वादयस्तु सामाजिकानाम् ऐहिकाभ्युदयिककार्यव्यवहारसौकर्य्याध्यात्माद्युन्नतिसिद्धर्थाः पूर्वं गुणकर्मानुसारतः पूर्वसामाजिकैः कल्पिताः । तदेतदिहापि श्रुतम्— "देवविशः कल्पयितव्या इत्याहुस्ताः कल्प्यमाना अनु मनुष्यविशः कल्पन्त इति"–इत्यादि १. २. ३. । तथा चाध्ययन मध्यापनं यजनं शंसनं स्तवन मुद्गानं ब्रह्मत्वं मन्त्रणादान मुपदेशदानादिकञ्चेति मुख्यानि मुखकर्माणि च येषां समाजेषूपलभ्यन्ते, तेषा मेव ब्राह्मणजातिः कल्पिता । क्षत्रियादीना मप्येवं बलादिप्रकाशकबाह्वादिभिरौपम्यं तत्तज्जातिकल्पनाबीजम् । तदेव श्रुत मृक्संहितायाम् १० ९०. १२—

"ब्राह्मणोऽस्य मुख मासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत"–इति ।

एवञ्च प्राचीनतमजातिविभागाः श्रेणिविभागा एव गम्यन्ते । अत एव देवतिर्यङ्ङृङ्क्छन्दःस्तोममन्त्राणा मपि सर्वेषां जातिविभागाः समाम्नाताः । तद्यथा देवानाम्—

"ब्रह्म वै देवानां बृहस्पतिः"–इति तै० सं० २. २. ९. १ ।

एवमादिषु ब्रह्मशब्दार्थो ब्राह्मणः ; तथाहि—

"ब्रह्म हि ब्राह्मणः"–इति च श० ब्रा० ५. १. १. ११ ।

"अग्ने ! महाऽँ असि ब्राह्मण ! भारत !"–इति तै० ब्रा० ३.५.३।
अन्यत्रान्यत्र च--"ब्रह्म ह्यग्निः"–इति श० ब्रा० १.५.१.११।

"ब्रह्म वै बृहस्पतिः"–इति श० ब्रा० ३.६.१.११।

"तच्छ्रेयोरूप मत्यसृजत क्षत्रं, यान्येतानि देवत्रा क्षत्राणि; इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति०--० स विश मसृजत, यान्येतानि देवजातानि गणश आख्यायन्ते; वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति०—०स शौद्रं वर्ण मसृजत पूषणम्"–इति श० ब्रा० १४.४.२.२३, २४, २५।

तिरश्चां जातिविभागो यथा—

"ब्रह्म वा अजः", "क्षत्रं वा अश्वः", "वैश्यश्च शूद्रश्चानु रासभः"
–इत्यादि श० ब्रा० ६.४.४.१२—१५।

उद्भिदां जातिविभागो यथा—

"ब्रह्म वै पलाशः"–इति श० ब्रा० १.१.१.४।
"क्षत्रं वा एतदोषधीनां यद् दुर्वा; क्षत्रं राजन्यः" ऐ० ८.२.४।

स्तोममन्त्राणां जातिविभागो यथा—

"ब्रह्म वै स्तोमानां त्रिवृत्, क्षत्रं पञ्चदशः,०—०
विशः सप्तदशः, शौद्रो वर्ण एकविंशः"–इति ऐ० ८.१.४।
त्रिवृत्पञ्चदशसप्तदशैकविंशाः सामवेदीयस्तोममन्त्राः।

छन्दसां जातिविभागो यथा—

"गायत्रच्छन्दसा (ब्राह्मणः)", "त्रिष्टुभच्छन्दसा (क्षत्रियः)"
–इत्यादिग्रन्थो द्रष्टव्यः ऐ० ७.४.५, ६।

तैत्तिरीयसंहितायान्त्वेकत्रैव स्तोमदेवताच्छन्दसाममनुष्य-पशूनां श्रेणीविभाग आम्नातो द्रष्टव्यः (७.१.६–८.)। तथाच त्रिवृत्स्तोम-अग्निदेव-गायत्रीच्छन्दो-रथन्तरसाम-ब्राह्मणमनुष्य-छाग-

पशूनां मुख्यत्वेनैकश्रेणीत्वम्, पञ्चदशस्तोम-इन्द्रदेव-त्रिष्टुप्छन्दो-बृहत्साम-राजन्यमनुष्य-मेषपशूनां बलवत्त्वेनैकश्रेणीत्वम्, सप्तदश-स्तोम-विश्वदेवदेव-जगतीच्छन्दो-वैरूपसाम-वैश्यमनुष्य-गोपशूनां बहु-त्वेनान्नसाधकत्वेन चैकश्रेणीत्वम्, एकविंशस्तोम-अनुष्टुप्छन्दो वैराजसाम-शूद्रमनुष्य-वाजिपशूनां पादोपजीवित्वेनैकश्रेणीत्वञ्चेति सुव्यक्तम्। एषु च स्तोमच्छन्दसाम्नां पादोपजीवित्वं त्वचरसञ्ज्ञा-नुगतत्वाद् बोध्य मिति।

तदेवं यद्यपि गुणकर्मानुसारतो ब्राह्मणाद्या जातयः कल्पिता इति स्पष्टम्, तथापि पशूद्भिज्जमनुष्येषु सम्प्रति ता जन्मानु-सारिण्य एव मन्यमाना भवन्ति। यथा मिष्टाम्रवीजतो मिष्टा-म्राणा मेव फलनं प्रायो नैसर्गिकम्, तथैव ब्राह्मणवीर्य्यादि-जातानां ब्राह्मणादित्व मवश्यम्भावीत्येव तत्र हेतुः। एव मपि यथा चेत्रादिदोषतो वस्तुगुणान्यथाभावोऽपि दृश्यते, तथेव ब्राह्मणाद्यौ-रसजाता अप्यब्राह्मणादयो भवन्तीत्यपि नाश्चर्यम्। अत एव "जातो नार्य्या मनार्य्यायाम्"—इत्याद्यपि स्मृतं मन्वादिभिः, इह चोद्धृतं तत् पुरस्तात् (१७ पृ० ८ पं०)।

अथ तेषां ब्राह्मणादिचतुर्वर्णानां स्वभावादय इहैतरेये यथा वर्णितास्ते चेह क्रमात् प्रदर्श्यन्ते। तत्र स्वभावाः—

ब्राह्मणानाम्— आदायित्वम्, आपायित्वम्, अवसायित्वम्, यथाकामप्रयाप्यत्वञ्चेति चत्वारो धर्म्मा विशेषतो लक्षिताः। 'आदायी' आदानं ग्रहणम्, प्रतिग्रहादिना जीविकादीना मादान-कारी। 'आपायी' अपायस्त्यागः, दानादिना धनादीनां त्याग-कारी। 'अवसायी' अवसायः सिद्धान्तः, विद्याबलेन सर्वतत्त्वानां निश्चयकारी। 'यथाकामप्रयाप्यः' प्रयाणं युद्धाय प्रस्थानम्, तत्र

राजादिभिः सेनानायकत्वादिना प्रेर्यः 'प्रयाप्यः', काम मनतिक्रम्य यथाकामम्, स्वकामनानुरूप मिति यावत्; तदेवं राज्यरक्षणा-र्थं युद्धाय प्रयाण मिच्छेच्चेत् राज्ञा प्रेषणीयो 'यथाकामप्रयाप्यः'। तदेतदिह ७.५.३ द्रष्टव्यम्। क्षत्रियाणान्तु— बलप्रतिष्ठा, आश्रित-रक्षणम्, सर्वोपकारित्वम्, तेजस्वित्वम्, यशस्वित्वञ्चासीद् वर्णनीयम्। वैश्यानां खलु— अन्यस्य बलिकृत्त्वम्, अन्यस्य आद्यत्वम्, यथाकामजेयत्वञ्चेति त्रीणि लिङ्गानि। शूद्राणां हि— अन्यस्य प्रेष्यत्वम्, कामोत्थाप्यत्वम्, यथाकामवध्यत्वञ्चेति च वर्णितं तत्रैव (७.५.५, ६.)। अथ भक्ष्याः—

ब्राह्मणानां बलकरो भक्ष्यः सोमो निर्णीतः, क्षत्रियाणां न्यग्रोधोदुम्बराश्वत्थप्लक्षफलानि बलहेतुभक्ष्याणि निर्णीतानि, तथा वैश्यानां दध्येवैकं बलकरं भक्ष्यं सूचितम्, शूद्राणां त्वाप एव भक्षिताः सम्यग् बलकरा भवन्तीति च तत्र ७.५.३—६। अपर मपि—"एता वै प्रजा हुतादा यद् ब्राह्मणा अथैता अहु-तादा यद्राजन्यो वैश्यः शूद्र इति"—इति ७.४.१। अथायुधानि—

"एतानि वै ब्राह्मणस्यायुधानि यद्यज्ञायुधानि; अथैतानि क्षत्रस्यायुधानि— यदश्वो रथः कवच इषु धन्व"—इति च तत्रैव। तानि च यज्ञायुधान्यन्यत्र परिगणितानि—"स्फ्यश्च कपालानि च, अग्निहोत्रहवणी च शूर्पं च, कृष्णाजिनं च, शम्या च, उलूखलं च मुशलं च, दृषच्चोपला चैतानि वै दश यज्ञायुधानि"—इति तै॰ सं॰ १.६.८.२, ३। तदानी मासीदपि क्षत्रियतोऽपि भूयस्त्वं ब्राह्मणानाम्। तद्यथा— "भूयान् वै ब्राह्मणः क्षत्रियादिति" —इति ७.३.३.।

शूद्राणां ब्राह्मणगृहाद्युपवेशनमप्यासीद्दोषावहम्। तथाहि

"दास्याः पुत्रः कितवो ऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति" -इत्यादि (२. ३. १.) समालोच्यम्। यज्ञकार्येषु गोदोहनादिष्वपि तेषां निषिद्धोऽधिकारः, तथा च तैत्तिरीयकम्— "शूद्र एव न दुह्यात्, असतो वा एष सम्भूतो यच्छूद्रः। अहविरेव तदित्याहुर्यच्छूद्रो दोग्धीति"-इति (ब्रा० १. २. ३.)। अत एव तेषा मयज्ञियत्वम्। यज्ञे दीक्षितस्य देवभाव मापन्नस्य यजमानस्य तैश्चायज्ञियैः सह वाक्यालापोऽपि निषिद्धः शतपथादौ— "स वै न सर्वेणेव संवदेत; देवान् वा एष उपावर्त्तते यो दीक्षते स देवताना मेको भवति; न वै देवाः सर्वेणेव संवदन्ते,— ब्राह्मणेन वैव, राजन्येन वा, वैश्येन वा (संवदन्ते); ते हि यज्ञियाः"-इत्यादिना (३. १. १. १०.)। मूर्खाणां सामीप्यमप्या सीत्तदानीं क्लेशायेत्याम्नातम्— "तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात्"-इति ३. ३. ६.। अत्र देवा इति सत्यवादित्वादिनामदेवत्वानां विदुषा मार्याणां ग्रहण मिष्टम्, मनुष्यशब्देन चानृतभाषणादिमनुष्यधर्मवतां मूर्खाणां शूद्राणा मित्येव। तदिदं शूद्राणा मयज्ञियत्वम्, मूर्खाणां सामीप्यायोग्यत्वञ्चातिमूर्खत्वकच्चरत्वकदाचारत्वकदाकारत्वादिनिबन्धन मेव; नान्यथा तान् प्रति कृत-दुर्व्यवहारस्य प्रायश्चित्तशासनं विहितं श्रूयेत। तच्च यथा य० वा० सं० २०. १७. १—

यच्छूद्रे यदर्य्ये यदेनश्चकृमा वयं
यदेकस्याधिधर्मणि तस्यावयजन मसि"-इति।

शूद्राणा मुन्नत्यर्थं यथायोग्यज्ञानोपदेशविधिश्च विहितः संहितायाम्, प्रदर्शितश्चेह पुरस्तात् (१७ पृ०)—

"यथेमां वाचं कल्याणी मावदानि जनेभ्यः।

ब्रह्मराजन्याभ्याᳬ शूद्राय चार्याय च स्वाय चारणाय''—इति।

चतुर्णा मेव वर्णानां हितप्रार्थने साम्यञ्च श्रुतं बहुत्र। तद्यथा तत्रैव यजुस्संहितायाम् १८. ४८. १—

"रुचं नो धेहि ब्राह्मणेषु, रुचं राजसु नस्कृधि।

रुचं विश्येषु शूद्रेषु, मयि धेहि रुचारुचम्''—इति।

आथर्वणिका अप्यामनन्त्येव मेव १९. ७. ८—

"प्रियं मा कृणु देवेषु, प्रियं राजसु मा कृणु।

प्रियं सर्वस्य पश्यत, उत शूद्र उतार्य्ये''—इति।

चतुर्णां वर्णाना माह्वानप्रयोगपार्थक्य मपि श्रुत मन्यत्र—

"तानि वा एतानि चत्वारि वाचः,—एहीति ब्राह्मणस्य, आगह्याद्रवेति वैश्यस्य राजन्यबन्धोश्च, आधावेति शूद्रस्य''—इति श० ब्रा० १. १. ४. १२।

अन्योन्यकरग्रहणेनान्योन्यकुशलजिज्ञासारूपः सम्मर्शननामशिष्टाचारश्चासीत् तदापीति च तत्रैव। तथाहि (२. ५. ४. १६, १७)—

"अथाध्वर्युश्च यजमानश्च सम्मृशेते। पूर्व्वयोर्द्दक्षिणेऽध्वर्युर्भवत्यपरयोरुत्तरे यजमानः, सोऽध्वर्युः पृच्छति यजमान किं मत्रेति भद्र मित्याह, तन्नौ सहेत्यपाᳬश्वध्वर्युः। अथापरयोर्द्दक्षिणेऽध्वर्युर्भवति पूर्व्वयोरुत्तरे यजमानः, स यजमानः पृच्छत्यध्वर्यो किं मत्रेति भद्र मित्याह, तन्म इति यजमानस्तद्यदेवᳬ सम्मृशेते प्राणानेवैतत् सयुजः कुरुतस्तस्मादिमे प्राणाः परः संविद्रेऽथ यत्पृष्टो भद्र मिति प्रत्याह कल्याण मेवैतन्मानुष्यै व्वाचो व्वदति तस्मात् पृष्टो भद्र मिति प्रत्याह''—इति। अद्यतनेङ्गलण्डीयादीना मप्येवं सम्मर्शनम्, परं तेषान्त्वेककरग्रहणप्रथैव दृश्यते, अस्माकन्तु करद्वयग्रहण मित्येव विशेषः। अतएवैवं निरुक्तम्—"प्रगृह्य पाणी देवान् पूज-

यन्ति"–इति (२. ७. ४.)। "विद्वांसो वै देवाः"–इति त्वसकृदिह वक्तव्यो वैदिकसिद्धान्तः ; तेषां दर्शनमात्रतः स्वपाणिद्वयेन तत्पाणि-द्वयस्य ग्रहण मेव प्रथमं पूजनम्, सम्मर्शनं नाम सत्कार इति तदर्थः।

प्रत्युत्थानशिष्टाचारश्चासीत् तदानीम्। तथाहि— "प्रति वै श्रेयांस मायन्त मुत्तिष्ठन्ति"–इति (२. ३. २.)। 'श्रेयांस मतिप्रशस्त माचार्यपित्रादिक मायन्तं स्वसम्मुखत्वेन समागच्छन्तं प्रति शिष्यपुत्रादय उत्तिष्ठन्त्येव'–इति तत्र सायणः। मनुसंहि-ताया मेत देव स्मृतम्— "शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत्" –इत्यादि (२.११९, १२०.)।

न केवलं प्रत्युत्थानं किन्तु अनुवर्त्तन मपि विहितम्। तथाहि— "अनु वै श्रेयांस पर्य्यावर्त्तन्ते"–इति (२. ३. २.)। 'श्रेयांस माचार्यादिक मनुगम्य शिष्यादयः परितः सञ्चरन्ति'– इति तत्र सायणः।

वाग्व्यवहारविषयेऽप्यासन्निह बहव उपदेशाः। तद्यथा–"वाक् तु सरस्वती" (३. १. १.), "वाग्घि सरस्वती" (३. १. २.), "वाग्वै सरस्वती" (३. ३. १३.), "वाचो वाव तौ स्तनौ, सत्यानृते वाव ते" (४. १. १.), "कोऽर्हति मनुष्यः सर्वं सत्यं वदितुम्, सत्यसंहिता वै देवा अनृतसंहिता मनुष्याः" (१. १. ६.), "विदुषा सत्य मेव वदितव्यम्" (५. २. ९.), "एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः, तस्मादाचक्षाण माहुरद्राक्षीरिति, स यद्यदर्श मित्याहाथास्य श्रद्दधाति ; यद्यु वै स्वयं पश्यति न बहूनाञ्च नान्येषां श्रद्दधाति" (१. १. ६.), "अवत्येनं सत्यं नैन मनृतं हिनस्ति" (४. १. १.), "विचक्षणवतीं वाचं वदेत्" (१. १. ६.), "असूर्या इव वा इतरा गिरः" (३. ५. ५.), "मनसा वा इषिता वाग

वदति, यां ह्यन्यमना वाचं वदति असुर्या वै सा वागदेवजुष्टा ( २. १. ५ ; ४. ५. ), "यां वै दृप्तो वदति, या मुन्मत्तः, सा वै राक्षसी वाक्" ( २. १. ७. )। अवच्छेदकावच्छिन्नव्यवच्छिन्नासम्बद्ध-सम्बन्धसम्बद्धान्यायभाषापीदानीन्तनन्यायभाषेतिविदेहवङ्गप्रसिद्धा ननु का भाषा, वानरी वा राक्षसी वा, यावनिकी वा ? इत्यप्यत्र स्याच्चिन्तनीयम् ; अपौरुषेयवैदिकग्रन्थेषु, अतिप्राचीनसूत्रस्मृति-न्यायमीमांसावेदान्तादिषु, अनतिप्राचीनेतिहासपुराणतन्त्रवैद्यक-ज्योतिषसङ्गीतकाव्यादिषु वा क्वचिदपि तथाविधवाग्जालाच्छन्नो-च्छन्नहेतुनिवेशप्रवेशाप्रतीतेः "वाक् च मनश्च वर्त्तन्यौ ; वाचा च हि मनसाच यज्ञो वर्त्तते ; इयं वै वागदो मनः" ( ५. ५. ८. ), "श्रद्धा पत्नी, सत्यं यजमानः, श्रद्धा सत्यं तदित्युत्तमं मिथुनम् ; श्रद्धया सत्येन मिथुनेन स्वर्गांल्लोकान् जयति" ( ७. २. ९. ), "पापस्य वा इमे कर्मणः कर्त्तार आसते ऽपूतायै वाचो वदितारो यच्छापर्णा इमापुत्यापतेमे मेऽन्तर्वेदि मासिषतेति" ( ५. १. १. ), "सोऽब्रवीत् तदहं तुभ्य मेव ददामि य एव सत्य मवादीरिति ; तस्मादेवं विदुषा सत्य मेव वदितव्यम्"-इति ( ५. २. ९. ) च।

विवाहबन्धन मपि तेषा मासीद्धितकरत्वेनाभिप्रेतम्। अत एवेवं श्रूयते— "नापुत्रस्य लोकोऽस्ति"-इति, "ऋण मस्मिन्सन्न-यत्यमृतत्वञ्च गच्छति। पिता, पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्"-इति च ७. ३. १। पिता एव पत्नीगर्भं प्रविश्य पुत्र-रूपेण पुनः प्रकाश मापद्यत इति च तत्रैव। तथाहि—"पति र्जायां प्रविशति गर्भो भूत्वा स मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते"-इति। तदेव मुत्पादिते पुत्रे वंशपरम्परया अमृतत्व मेव स्वस्यापादितं भवतीति तेषा मभिप्रायः।

तत्र क्षत्रियाणां वैश्यशूद्रस्वभावपुत्त्रनिन्दायास्तु का कथा, ब्राह्मणस्वभावपुत्त्रोऽप्यासीदनीप्सितः। तथाहि—"ब्राह्मणकल्पस्ते प्रजाया मा जनिष्यत"—इत्यादि (७. ३.) द्रष्टव्यम्। वैश्य-शूद्रस्वभावपुत्त्रानीप्साऽपि तत्रैवाम्नाता।

तदानी मेकस्यां तदधिकायां वा जायायां जीवितायामपि जायान्तरपरिग्रहणं नासीद् दोषावहम्, ततश्च जीवत्पत्नीकस्यापि पुंसः क्रमाद् युगपद्वा बहुविवाहो नैवासीदसामाजिकः। तदुक्त मिह— "यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनम्"—इति (३. ५. ३.)। इतोऽपि व्यक्त माम्नातम्—"एकस्य बह्व्यो जाया भवन्ति"—इति (३. २. १२.)। अपि नासीच्च तदानी मपि जीवत्पतिकायाः स्त्रियाः पत्यन्तरग्रहणाचारः। तदप्युक्तं तत्र उत्तरम्—"नैकस्यै बहवः सह पतयः"—इति। अत्र सहशब्द श्रुतेर्मृतपतिकायाःत्यक्तपतिकाया वा पत्यन्तरग्रहणं न तदानीन्तनाचारविरुद्ध मित्यपि गम्यत एव। किन्तु तथाविधविधवावेदनन्त्वासीन्नीचजातिष्वेव प्रचलित मिति च पुराणेतिहासाख्यानतोऽवगम्यते, तच्चिदानी मपि वर्त्तत एवेत्यस्माकम्। स्वयम्वरसभायां समागतेषु कन्यापाणिग्रहणार्थिषु पणजयकारिणि कन्यादानप्रथाप्यासीत्तदापि। तदाह—"प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्; तस्यै सर्वे देवा वरा आगच्छं स्तस्या एतत् सहस्रं वहतु मन्वाकरोद्, तदेतदाश्विन मित्याचक्षते—इति (४. २. १.)। तदानीन्तनस्त्रीणा मप्यासीदसाधारणपाण्डित्यम्। तदग्निहोत्रकालनिर्णायिकाख्यायिकायाम्—"कुमारी गन्धर्वगृहीता वक्ता स्मः"—इत्यादि (५. ५. ४.)।

तदानी मपि स्नुषा श्वशुराल्लज्जते स्मैवार्याणाम्। तथाहि—

"स्नुषा श्वशुराल्लज्जमाना निलीयमानेति"-इति ( ३. २. ११. )। अपि तदाप्यार्य्याणां सोदर्य्याणा मपि भगिनीनां भ्रातृजायानुगतत्व मेवासीत्। तच्चाम्नात मिह यथा—"समानोदर्या स्वसा ऽन्योदर्यायै जायाया अनुजीविनी जीवति"-इति ( ३. ३. १२. )। तदेवं सोदर्य्याया अपि स्वसुरनात्मीयत्व मन्यकुलतो लब्धाया अपि जायाया आत्मीयत्वं पारम्पर्य्यागत मेवेति स्यात् स्वीकार्यम्।

अत्राग्निहोत्रस्य त्वतिकर्त्तव्यतया अपत्नीकस्यापि तत्कर्त्तव्यता प्रतिपादिता। तथाच— "तदाहुर्वाचापत्नीको ऽग्निहोत्रम्"-इत्यादि ( ७. २. ६. )। तस्य ह्यग्निहोत्रस्य दृष्ट मदृष्टञ्च फलं तैरधिगतम्; अत एव तैर्नित्याग्निहोत्रिभिः सद्भिः सदैव स्वस्व-गृहेषु अग्निरक्षणं कर्त्तव्य मिति सिद्धान्तितम्। तदिदं श्रूयते — "मनुषो दुरोणे"-इति (ऋ० सं० १०. १११. १.), व्याख्यातञ्चैतद् यास्केन 'मनुष्यस्य मनुष्यस्य गृहे ( ८. २. २. )' -इति। हिमानीवासिनां तेषां प्राचीनार्य्याणां हिमपातक्लेशनिवा-रणाय स्वस्वगृहेष्वग्निरक्षणं नून मासीत् सुखावहम्; श्रुतं ह्येवम् -"अग्निर्हिमस्य भेषजम्"-इति (वा० सं० २३. १०.)। तत्र चाग्नौ विविधसुगन्धादिद्रव्यदानविधानञ्च श्रुत मस्ति। तद्यथा—"कुलाप मिव ह्येतद् यज्ञे क्रियते यत् पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः सुगन्धितेजनानीति"-इति ( १. ५. २. )। तैत्तिरीये त्वत्र आख्यायिकाख्यान मपि सं० ६. २. ८ द्रष्टव्यम्। तैः सुगन्ध्यादिभिः गृहजातवायुदोषोऽपिप्रशमितो भवतीति च दृष्टम्। यदग्नौ आज्या-मिरपयःपयस्यासान्नाय्यचरुपुरोडाशसोमाद्याहुतयः प्रदीयन्ते ततस्त-द्वाष्पप्रसूता वृष्टिधारास्तत्तद्गुणयुक्ता भवन्त्येवेति तज्जातौषध्यादीनां भक्षणतः खल्वाज्यादिसाराहार एव सम्पद्यतेऽस्माक मिति च दृष्ट

मेव। अदृष्टं तु स्वर्गादि, श्रुतिमानगम्यम्। तदेवं दृष्टादृष्टफल सिद्ध्यर्थ मेवासीत् तेषां नित्याग्निहोत्रानुष्ठान मिति प्रतीयते स्फुटम्।

अग्निहोत्रानुष्ठानाय प्रातःस्नानस्य कर्त्तव्यता चात्र सूचिता। तथाहि—"य आहिताग्निर्यदि प्रातरस्नातोऽग्निहोत्रं जुहुयात्, का तत्र प्रायश्चित्तिरिति"—इत्यादि ७. २. ८। तत्रैव आग्रयणेनानिष्ट्वा नवान्नप्राशने, पाकपात्रे नष्टे, पवित्रनाशे, हिरण्येऽनुद्दिष्टे अपहृते च जीवत्यपि कस्मिंश्चिदात्मीये स मृत इति श्रुते, जायायाः स्व-गोर्वा यमसन्तानजननेऽपि प्रायश्चित्तं विहितम्। तथा तत्रैव सूतकान्नप्राशनकारिणा मपि प्रायश्चित्तं विहितम्। यथा विहितहोमादिरूपप्रायश्चित्तत एषु तथाविधपापानां भवति सङ्क्षय इति च तत्र तत्र सुव्यक्तम्। अग्निहोत्राद्यनुष्ठानाय ततः प्राक् स्नानं नु विहितम्, न पुनः किञ्चिद् भोजनं तु निषिद्धम्; प्रत्युत किञ्चिद् भुक्त्वैव कर्माणि कुर्वीतेत्येवेहान्यत्र ध्वनितम्। तथाहि—"घृतं प्राश्य शंसेद् यथा ह वा इद मनो वा रथो वाक्तो वर्त्तत एवं हैवाक्तो वर्त्तते"—इति ४. २. १।

मृतस्य शरीरालाभे पर्णशरीरदाहोऽप्यासीत्तदानी मपि अवस्थितः। तदाह—"यदि शरीराणि न विद्येरन्, पर्णशरः षष्टिस्त्रीणि च शतान्याहृत्य तेषां पुरुषरूपक मिव कृत्वा तस्मिंस्ता मावृतं कुर्युः। अथैनाञ्छरीरैराहृतैः संस्पर्श्योद्वासयेयुः; अध्यर्द्धशतं काये, सक्थिनी द्विपञ्चाशे च विंशे, चोरू द्विपञ्चाशे, शेषन्तु शिरस्युपरि दध्यात्"—इति ७. २. १।

तदानीन्तनार्याणां देवपितृमानुषार्च्चनपरताप्यासीत्, तदभावे 'अनद्धापुरुषः'—इतिनिन्दाभाजनत्वं तेषा मवश्यम्भाव्येवेति। तदाह—"कोऽनद्धापुरुषः? इति, न देवान्, पितॄन्, न मनुष्यान्"—इति

( ७. २. ८. )। अत्रार्च्चतीति पदन्तु शेषयितव्यम्। स्फुट मेतच्छत-पथे—"एष ह वा अनद्धापुरुषो यो न देवानर्च्चति, न पितॄन्, न मनुष्यान्"–इति ( ६. ३. १. १४. )। 'अद्धा'–इति सत्यनाम ( निघ० ३. १०. ४. ), अनद्धा—असत्यः, तथाचानद्धापुरुषोऽसत्य-पुरुषः। एवं हि यः पुरुषो देवान् पितॄन् मनुष्यांश्च नार्च्चति, अजा गलस्तनस्येव तस्य जन्म निरर्थकम्'–इति भावः। तदेवं देवाद्यर्च्चन-विहीनस्य निन्दावादः सम्पन्नः। तदत्र समासतो देवादीनेव पूर्वं निरूपयामः।—

देवाः। निघण्टौ द्युस्थानभाजनेषु 'देवाः'–इति षड्विंशं पदम्। ततो गम्यते द्युलोक एव प्रधानतस्तेषां स्थानम्। 'देवाः रश्मय उच्यन्ते'–इति तद्भाष्ये देवराजः। महामुनियास्केनापि निरुक्ते देवा इत्यस्यैष एवार्थ उल्लिखितः—"रश्मयोऽत्र देवा उच्यन्ते"–इति ( १३. १. १२. )। यास्कप्रदर्शित मुदाहरण मेव च देवराजेन प्रदर्शितम्— "देवानां भद्रा सुमतिर्ऋजूयताम् ( ऋ० सं० १. ८९. २. )"–इति, निघ० ५. ६. २६। निरु० १२. ४. ५; १३. १. ११ द्रष्टव्यम्। पार्थिवस्याग्नेर्माध्यमिकस्य च विद्युतोऽपि रश्मिजन्यत्वेन, उत्तमाग्नेः सूर्यस्य तु रश्मिजनकत्वेन जन्यजनकयो-रभेदात् रश्म्यभिन्नत्वम्। किञ्चास्त्येषां प्रथममध्यमोत्तमानां त्रयाणा मेवाग्नीनां रश्मिवत्त्वम्; "त्रयः केशिनः"–इत्यस्य व्याख्याने सुव्यक्त मुक्तञ्चैतद् यास्केन— "केशा रश्मयः, तैस्तद्वान् भवति०—० आदित्य माह, अथाप्येते इतरे ज्योतिषी केशिनी उच्येते, धूमेनाग्नी रजसा च मध्यमः"–इति ( निरु० १२. ३. ६, ७, ८. )। एषा मेव त्रयाणां भक्तिसाहचर्यादितो बहवो देवा अर्च्यन्ते। तदपि व्यक्त मुक्तं यास्काचार्येण— "तिस्र एव देवता इति नैरुक्ताः०—०

तासां महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति”
–इत्यादि ७. २. १ ; ३. १० ! “यो देवः सा देवता”–इति च
निरु० ७, ४. २ । विवरिष्यामश्चैतद्दिव्वैवोपान्त्यप्रकरणे ।

पितरः । निघण्टौ अन्तरिक्षस्थानभाजनेषु ‘पितरः’–इति
द्वादशं पदम् । ततो गम्यते अन्तरिक्षलोक एव प्रधानतस्तेषां
स्थानम् । “पिता, ‘पाता वा पालयिता वा’–इत्यादिना ( निरु०
४. ३. ५. ) व्याख्यातः ; जस्”–इति तद्भाष्ये देवराजः । महामुनि-
यास्केन हि– “पितरो व्याख्यातास्तेषा मेषा भवति”–इत्युक्त्वैव,

“उदीरता मवर उत् परास
उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्
तेनोऽवन्तु पितरो हवेषु”–इति (१०. १५. १.) ।

एषा ऋगिह उदाहृता । व्याख्याता च सा एवम्— “उदीरता
मवर उदीरतां पर उदीरतां मध्यमाः पितरः सोम्याः सोमसम्पा-
दिनस्तेऽसुं ये प्राण मन्वीयुरवृका अनमित्राः सत्यज्ञा वा यज्ञज्ञा वा
ते न आगच्छन्तु पितरो ह्वानेषु”–इति (निरु० ११. २. ६.) ।

तथाच तस्या ऋच एषोऽर्थः सम्पद्यते— “हवेषु” ‘ह्वानेषु’
यस्मादाह्वानेषु सत्सु “ते” ‘पितरः’ पितृगणाः “नः” अस्मान्
“अवन्तु” ‘आगच्छन्तु’ । ते कीदृशाः ? इत्याह— “ये” “असुं”
‘प्राणम्’ “ईयुः” ‘अन्वीयुः’ प्राप्तवन्तः, पूर्वं प्राणान्विता आसन्निति
यावत् । तत्र जीवितकाले “अवृकाः” ‘अनमित्राः’ सर्वत्र सर्व-
दैव साधुव्यवहारतः अमित्रशून्याः, “ऋतज्ञाः” ‘सत्यज्ञा वा यज्ञज्ञा
वा’ कर्त्तृतया कारयितृतया वा यज्ञानुष्ठानविदः , “सोम्यासः”
‘सोम्याः =सोमसम्पादिनः’ च आसन्निति । ते च कतिविधाः ?

इत्याह—"अवरे", "परासः" 'परे', "मध्यमाः" चेति त्रिविधाः। तत्र, 'परे' द्युस्थान्तरिक्षचारिणः, "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते"–इत्यादिना छान्दोग्ये (५. १०. १, २.) वर्णिता देवयानमार्गेण सूर्यलोकं गताः; 'मध्यमाः' द्यावापृथिव्योरन्तरेण स्थायिनः, "य इमे ग्राम इष्टापूर्त्ते दत्त मित्युपासते"–इत्यादिना छान्दोग्ये (५. १०. ३–६.) वर्णिताः पितृयानमार्गेण चन्द्रलोकं गताः; 'अवरे' भूपृष्ठस्थान्तरिक्षचारिणः, "अथैतयोः पथोर्न कतरेण च"–इत्यादिना छान्दोग्ये (५. १०. ८.) वर्णिताः पृथिव्या मेव निरन्तरावर्त्तिनः। तदेषां त्रिविधानां पितॄणां मध्ये येऽवरास्तेषा मप्राप्तमार्गाणा मसकृदावर्त्तित्वेन क्वचिदपि दीर्घकालस्थितिसम्भावनाभावात् न पितृलोकस्थत्वम्; ये परास्तेषा मपुनावर्त्तित्वश्रुतेस्तथात्व मेव; ये तु मध्यमाश्चन्द्रलोकं पितृलोकं वा गतास्तेषा मेव स्वस्थानस्थत्वेन प्राधान्य मिष्टम्। अतएव अन्तरिक्षस्थानेष्वेव पठितं पितर इति पदम्। यास्केनाप्युक्तम्— "माध्यमिको यम इत्याहुस्तस्मान्माध्यमिकान् पितॄन् मन्यन्ते"–इति (११. २. ५. ६.)। 'स हि तेषां राजेति'--इति च तत्र दौर्गी वृत्तिः। "परेयिवांसं प्रवतो महीरनु"--इत्यादिसूक्तद्वये (ऋ० सं० १०. १४, १५) यमस्य पितृराट्त्वं पितॄणां स्वरूपञ्च सुव्यक्तम्।

तत्रतस्तु अन्नरससाहाय्येन स्वजनकदेहे प्रविष्टो जीवो रेतोऽन्तःस्थः प्रथमगर्भः सम्पद्यते; यदैव तद्रेतो योनौ सिक्तं भवति, तदैव तस्य प्रथमं जन्म। ततस्तद्रेतो मातृयोनौ द्वितीयगर्भाकारेण परिणतं भवति; भूमिष्ठे हि तस्मिन् गर्भे पुरुषस्य द्वितीयं जन्मेति मन्तव्यम्। ततो मृते च यत् पिशाचाद्यन्यतमं शरीरं लभते, तदेव तस्य तृतीयं गर्भरूपम्; ततः पित्राद्यन्यतमलोक-

प्राप्तिरेव तत्तृतीयं जन्मेति मन्यते। तदाहुरेतरेयिणः— "अप-क्रामन्तु गर्भिण्यः। पुरुषे ह वा अय मादितो गर्भो भवति, यदे-तद् रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूत मात्मन्येवात्मानं बिभर्त्ति, तद्यदा स्त्रियां सिञ्चत्यथैनं जनयति; तदस्य प्रथमं जन्म। तत् स्त्रिया आत्मभूयं गच्छति, यथा स्वमङ्गन्तथा तस्मादेनां न हिनस्ति, सास्यै-त मात्मान मत्र गतं भावयति, सा भावयित्री भावयितव्या भवति, तं स्त्री गर्भं बिभर्त्ति, सोऽग्र एवं कुमारं जन्मनोग्रेऽधिभावयति, स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मान मेव तद्भावयति एषां लोकानां सन्तत्या एवं सन्तता हीमे लोकाः; तदस्य द्वितीयं जन्म। सो ऽस्याय मात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते; अथास्याय मितर आत्मा कृतकृत्यो वयोगतः प्रैति, स इतः प्रयन्नेव पुनर्जायते; तदस्य तृतीयं जन्म"–इति (२ आ० ५. १.)।

शतपथे तु मृत्युप्रकारो मृतस्य तस्य पितृयादिदेहलाभश्चाम्नातः। तथाहि— "स यत्रायं शारीर आत्मावल्यं नीत्य सम्मोह मिव न्येत्यथैन मेते प्राणा अभिसमायन्ति, स एतास्तेजोमात्राः समभ्या-ददानो हृदय मेवान्ववक्रामति। स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहुरेकी-भवति न जिघ्रतीत्याहुरेकोभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजाना-तीत्याहुः। तस्य हैतस्य हृदयस्याग्रं प्रद्योतते, तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य-स्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राण मनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति, सञ्ज्ञान मेवान्ववक्रामति, स एष ज्ञः सविज्ञानो

भवति ; तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च। तद्यथा तृणजलायुका तृणस्यान्तं गत्वात्मान मुपसꣳहरत्येव मेवायं पुरुष इदꣳ शरीरं निहत्याविद्यां गमयित्वात्मान मुपसꣳहरति। तद्यथा पेशस्कारी पेशसो मात्रा मुपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एव मेवायं इदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यन्न-वतरꣳ रूपं तनुते, पित्र्यं वा गान्धर्वं वा, ब्राह्मं वा प्राजापत्यं वा, दैवं वा मानुषं वान्येभ्यो वा भूतेभ्यः"–इति १४. ७. २. १—५.। अत्र पित्र्यं गान्धर्वञ्च मिथो गुणकर्मादितः किञ्चिद्भेदयुक्त मन्तरिक्ष-लोकगं रूपम् ; ब्राह्मं प्राजापत्यं च तथा मिथः सामान्यभेदयुक्तं द्युलोकगं रूपम् ; एवं दैवं मानुषञ्च विद्वत्त्वाविद्वत्त्वभेदभिन्न मिहत्यं रूपम्। इत्थ मपि छान्दोग्याद्युक्तं पितॄणां गतिवैविध्यम्, उदीरतामितिमन्त्राम्नातपितृवैविध्यञ्चोपपन्नं भवति। तदेवं यास्क-व्याख्यातस्योदीरतामितिमन्त्रस्थस्य 'असुं य ईयुः'–इत्यंशस्य पितृगा-द्यन्यतमदेहगतं प्राणं ये अन्वीयुरित्येवार्थः सुष्ठुतर इत्यस्माकम्। पिण्डपितृयज्ञप्रकरणादौ च (य० वा० २. २०—३४.; श० ब्रा० २. ४. ४. १—२४.; तै० ब्रा० १. ३. १०, २. ६. ३.) पितृगण-स्वरूपं पर्यालोच्यम्। यमपितृलोके पुनर्निर्णेष्याम इहैवान्यप्रकरणे।

मनुष्याः। ऐतरेये त्विहैतच्छब्दनिर्वचन मेवं प्रोक्तम्—"मेदं प्रजापते रेतो दुषदिति०—०तस्मादुषं सन्मानुष मित्याचक्षते परोक्षेण"–इति (३. ३. ९.)। "मनुष्याः कस्मात्? मत्वा कर्म्माणि सीव्यन्ति, मनस्यमानेन सृष्टाः, मनस्यतिः पुनर्मनस्वी-भावे ; मनोरपत्यम्, मनुषो वा"–इति त्वाह यास्कः (निरु० ३. २. १.)। "मनोर्जातावञ्यतौ षुक् च"--इति च पा० ४. १. १६१ सूत्रम्। 'समुदायार्थो जातिः ; मानुषः मनुष्यः'–इति

तत्र दीक्षितः । तत्रास्मत्सु "षडर्घ्या भवन्ति,—आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति"–इति गो० गृ० सू० ४. १० । मातृपित्राचार्य्याणां पूजनीयत्वं तु तैत्तिरीय-(आ० ७. ११.)-मन्वादि-(२. २२५.)-प्रसिद्धम् ॥

शतपथब्राह्मणे त्वेषां देवपितृमनुष्याणा मेकत्रैव विशेषपरिचय आम्नात उपासनाप्रकारश्च । तथाहि—"ततो देवाः; यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन् । तानब्रवीत्—यज्ञो वोऽन्नम्, अमृतत्वं वः, ऊर्ग् वः, सूर्यो वो ज्योतिरिति । अथैनं पितरः, प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन् । तानब्रवीत्—मासि मासि वोऽशनꣳ, स्वधा वः, मनोजवो वः, चन्द्रमा वो ज्योतिरिति । अथैनं मनुष्याः; प्रावृता उपस्थं कृत्वोपासीदन् । तानब्रवीत्—सायम्प्रातर्वोऽशनम्, प्रजा वो, मृत्युर्वो, ऽग्निर्वो ज्योतिरिति"–इति (२. ४. २. १, २, ३.) ।

एषा मेव देवपितृमनुष्याणा मर्चनं कर्त्तव्यत्वेनेहैतरेये समाम्नातम्— "एष ह वा अनृद्धापुरुष इत्यादिना । तत्र हि अग्निहोत्रादिभिः श्रौतैः वैश्वदेवादिभिश्च गृह्यैर्देवाना मर्च्चनं सम्पद्यते; पिण्डपितृयज्ञादिभिः श्रौतैः स्वस्वसूत्रोक्तप्रकारैः श्रद्धयान्नजलादि-प्रदानात्मकश्राद्धादिभिश्च पितॄणा मर्च्चनं सम्पद्यते; निष्कपटविनीत-भावप्रदर्शनाज्ञापालन-ससमादरपक्वापक्वान्नाद्याहारादि–प्रदानैर्मनुष्याणा मर्च्चनं सम्पद्यते ।

अतिथिसत्कारविषये गाथाप्येकाम्नाता— "तद् यददो गाथा भवति— अनेनस मेनसा सो ऽभिशस्तादेनस्वतो वापहरादेनः । एकातिथि मप सायं रुणद्धि बिसानि स्तेनो जहारेति"–इति ५.५.५ । गाथैषा नैतद्ब्राह्मणप्रवक्तुः कल्पिता, प्रत्युत बहुप्राचीना,

अनेनात्र स्मृतेत्येव। तदाह तद्भाष्ये सायणः—'पुरा कदाचित् सप्तर्षीणां संवादप्रसङ्गे कश्चित् पुरुषो बिसस्तैन्यलक्षण मपवादं प्राप्य तत्परिहारार्थं मृषीणा मग्रे शपथं चकार, तदीयशपथोक्तिरूपेयं गाथा'—इति। तच्छपथस्वरूपञ्च तत्र तेनैवैवं व्याख्यातम्—'बिसानि पद्ममूलानि, तेषा मपहर्त्ता ( एवं ) प्रत्यवायपरम्परां प्राप्नोतु ;— पापरहिते पुरुषे विसस्तैन्य मपवादं कृतवतो यः प्रत्यवायः, पापिनः पुरुषस्य सम्बन्धि पापं स्वीकुर्वतो यः प्रत्यवायः, सायङ्काले गृहे समागच्छत एकातिथेर्वैदेशिकस्यारोधने यः प्रत्यवायः, सेयं प्रत्यवायपरम्परा विसस्तैन्ये सति मम भूयादित्येवं शपथः'—इति। अस्माकं त्वस्या गाथाया ऋजुतरोऽर्थान्तरः प्रतिभाति। तद्यथा—यः कश्चित् 'अनेनसम्' अपापम् आरोप्यमानपापशून्यं जनम्, 'एनसा' आरोप्यमानेन पापेन 'अभिशस्तात्' निन्देत्, 'सः' निन्दकः 'एनस्वतः' स्वभावजातपापिनः तस्य निन्दितस्य यत् कि मपि स्वभावजम् 'एनः' पापम् अस्ति, तदेव 'अपहरात्' अपहरणं कुर्यात्। सन्ति हि सर्वेषा मेव मानवानां स्वभावजानि पापानि। तदप्याहात्रैव—"व्यतिषक्त इव वै पुरुषः पाप्मना"—इति ( ४. १. ४. । इत्थं गाथापूर्वार्द्धेन वृथापवादकीर्त्तनं निषिद्धम्, अथापरार्द्धेनातिथिविमुखीकरणं निषिध्यते— यः कश्चिद् 'सायं' काले समागतम् 'एकातिथिं' सर्वातिथिलक्षणसम्पन्न मत एव प्रधानातिथिम्, एकसञ्ज्ञामात्र मतिथिं वा 'अपरुणद्धि' स्वागतासनान्नपानादिक मदत्त्वा विमुखीकरोति, 'सः' 'स्तेनः' चौरः सन् 'बिसानि' मृणालानि, तद्वतानीव शूक्ष्मतन्तुरूपाणि तदतिथिशरीरस्थानि स्नायुनामजीवनहेत्वङ्गबन्धनानि 'अपजहार' तज्जीवनापहरणपातकभाग् भवतीति भावः।

अहोऽतिथिसत्कारायासीत् तदाप्यगाघातश्च प्रचलितः। तत एव सोमे राजन्यागते या आतिथ्येष्टिर्विहिता, तत्र पशुघातानुकल्पश्च विहितः— "तद्यथैवादो मनुष्यराज आगते, ऽन्यस्मिन् वार्हति उक्षाणं वा वेहतं वा क्षदन्त एव मेवास्मा एतत् क्षदन्ते, यदग्निं मन्थन्ति; अग्निर्हि देवानां पशुः"–इति (१. ३. ४.)। अप्युषःशब्दस्य पोषार्थतानिर्णयाय चाम्नात मेवम्— "एतर्हि गव्यं मीमांसमानाः पृच्छन्ति, सन्ति तत्रोषा३ः इति"–इति (४. ४. ५.)। सायणकृत मेवैतद्व्याख्यानं द्रष्टव्यम्। मांसभक्षणविधिस्त्वाम्नात इहान्यत्रापि। तथाहि—"नाग्नीषोमीयस्य पशोरश्नीयात्०—० तत्तन्नाद्रत्यम्०—० तस्याशितव्यञ्चैव लीप्सितव्यञ्च"–इति (२. १. ३.)। अमेध्यमांसभक्षणे दोषो मेध्यमांसभक्षणेऽदोषश्चाम्नातः। तथाहि— "एत उत्क्रान्तमेधा अमेध्याः पशवस्तस्मादेतेषां नाश्नीयात्"–इति २. १. ८.। 'एते' पुरुषकिम्पुरुषगौरगवयोष्ट्रशरभा इति षट् अमेध्याः, अश्वगोऽव्यजपृथिवीभवाः पञ्च मेध्याः। पृथिवीभवत्वेनेह व्रीह्यादीनां ग्रहण मिष्टम्। अतएव श्रुतम्— "स वा एष पशुरेवालभ्यते यत् पुरोडाशः"–इत्यादि २. १. ९.। तत्राप्यजमांसस्यासीद् बहुप्रचलन मिति च प्रतीयते; तत्रैव "एष एतेषां पशूनां प्रयुक्ततमो यदजः"–इतिश्रुतेः। "छागो वा मन्त्रवर्णात्"–इति चात्र मी० द० ६. ८. ३१ सूत्रम्। वृथापशुघातनिन्दाप्यस्ति – "अथ येऽतोऽन्यथा सेडगा वा पापकृतो वा पशुं विमथ्नीरंस्ताद्दृक्तात्"–इति ७. १. १.। सैषा पशुहिंसा यद्यप्यस्मभ्यं न रोचते, तथाप्युदाहृतव्यवहाराणां यावन्नावैदिकत्वं प्रतिपद्येत, तावदेवमादिषु "आम्नायवचनादहिंसा प्रतीयेत (१. ५. २.)"–इति निरुक्तवचन मेव शरणम्।

अतिथिसत्कार इवेहान्येऽप्युपदेशाः समाम्नाताः। तद्यथा— "अभिहेषते पिपाषते चिप्रं प्रयच्छेत्"–इति (६.२.५.)। एतेन स्थानविशेषे द्रव्यविशेषस्य दानचिप्रता विहिता। "अप्रसूतः करोत्यकृतं तदकृत मकरिति वै निन्दन्ति"–इति (२.५.६.)। एतेन सर्वेष्वेव विचार्यकर्मसु गुर्वाद्यनुज्ञा स्वाम्यनुज्ञा वा ग्रहणीयेत्युपदिष्टम्।

आसीच्च तदानी मार्त्विज्यप्राशस्त्यम्, अयाज्ययाजननिषेधश्च। तदाह— "यशसा वा एषोऽभ्यैति, य आर्त्विज्येन। तं यः प्रतिरुन्धेद्, यशः स प्रतिरुन्धेद्; तस्मान्न प्रत्यरोत्सीदिति। यदि त्वस्मादपोज्जिगांसेद्, यज्ञेनास्मादपोदियात्। यदि त्वयाज्यः स्वय मपोदितं तस्मात्"–इति ६.४.८। तदेव मार्त्विज्याय आहूतस्य तत्त्यागो दोषाय भवति, त्यागायोपदेशो बाधनं वापि दोषायैव। यदि तु स्वयं यष्टु मिच्छुः स्यादन्यत्र वृतो वा भवेत्, तर्हि परार्त्विज्यत्यागो न दोषाय। एव मयाज्ययाजनं च न कर्त्तव्यम्। पापपुरुषयाजनस्य निषेधस्त्विहान्यत्राप्याम्नातः— "न पापः पुरुषो याज्यः" –इति (४.४.३.)। अपि यथा पापपुरुषाणा मयाज्यत्वं विहितम्, तथैवार्त्विज्याय पापपुरुषाणां वरण मपि निषिद्धम्— "पापस्य वा इमे कर्मणः कर्त्तार आसते ऽपूतायै वाचो वदितारो यच्छापर्णा इमानुत्थापतेमेऽन्तर्वेदि मासिषतेति"–इति ७.५.१। अपरत्र चेह लोभाद्याहतचित्तानां तेजःशून्यानाम्, मात्सर्यादिपूर्णानां च तमःप्रकृतीनाम्, पापानुष्ठातॄणां दुर्मतीनाञ्चार्त्विज्याय वरणं निषिद्धम्। तथाहि— "त्रीणि ह वै यज्ञे क्रियन्ते,— जग्धं गीर्णं वान्तं०—०स एतेषां त्रयाणा माशां नेयात्"–इति ३.५.२। यः खलु धनलोभादार्त्विज्यं कामयमानः कथ मपि यजमानं

तत्कर्मकारयितार मपरं वा चाटुवृत्त्यादिभिस्तोषयन्नार्त्त्विज्यंलभते, तादृशेन तेन कृतं तत् कर्म 'जग्धं' भक्षितं, मुखमध्ये प्रविष्ट मिव दूषितं भवति। यो हि समाजाधिपत्येन ग्रामप्रभुत्वेन वापरेण केनापि वा हेतुना यजमानादेर्भीति मुत्पादयन्नार्त्त्विज्यं लभते, तादृशेन तेन कृतं तत् कर्म 'गीर्णं' गिलितं, गलाधःकृत मिव दूषितं भवति। यस्तु विद्वानपि पापकर्मा भवति, तत्कृतं यत् किञ्चन कर्म तत् सर्वं 'वान्तं' उद्गीर्णं, छर्दित मिव घृण्यं भवति देवानाम्। तदेवं-विधानां त्रिविधाना मृत्विजां वरणाय यजमानो मनसि आशा मपि न कुर्यादिति। मूर्खस्यार्त्विज्यदूषणन्तूक्त मिहान्यत्रापि— "त ऋत्विजो यजमानं कर्त्त्वं मन्वस्य वित्त मादाय द्रवन्ति, य मनेवं-विदो याजयन्ति"–इति ८. २. ७।

अथ व्यवहारः।— राज्ञां पुरोहितस्यावश्यकता चात्र बहुधा प्रत्यायिता। तद्यथा — "न ह वा अपुरोहितस्य राज्ञो देवा अन्न मदन्ति, तस्माद्राजा यक्ष्यमाणं ब्राह्मणं पुरो दधीत, देवा मेऽन्न मदन्निति"–इति ८. ५. १। इत्थं ब्राह्मणजातेरेव पौरोहित्य मिति च ज्ञापितम्। एतद्वचनोपक्रमे व्यक्तञ्चाम्नातम्— "ब्राह्मणः पुरोहितः"–इति। राजन्यवैश्ययोः पुरोहितार्षेयेण दीक्षावेदनञ्च विहितम्— "पुरोहितस्यार्षेयेण दीक्षा मावेदयेयुः, पुरोहितस्या-र्षेयेण प्रवरं प्रवृणीरन्"–इति (७. ४. ७.)। इतो वैश्याना मपि पुरोहितापेक्षा सूचिता। बुद्धिमत्तमाना मार्याणां पुरो-हितविधेः कथा तु दूरे आस्ताम्, जडाना मपि पृथिव्यादीनां पुरोहिताः सन्तीति च कल्पितम्— "अग्निर्वाव पुरोहितः पृथिवी पुरोधाता, वायुर्वाव पुरोहितो ऽन्तरिक्षः पुरोधाता, आदित्यो वाव पुरोहितो द्यौः पुरोधाता ; एष वै पुरोहितो य एवं वेद, अथ स

तिरोहितो य एवं न वेद"–इति ८. ५. ४। तदेवं यथा पृथिव्यादिष्वग्न्यादीनां प्राधान्यम्, तथैव यजमानगृहेषु पुरोहितानां प्राधान्यं ध्वनितम्, विहितञ्च पुरोहितानामेतद्विज्ञानवत्त्वम्; ब्राह्मणाना मपि येषां पृथिव्यादिनिष्ठाग्न्यादिपुरोहितत्वविज्ञान मविदितम्, तादृशा मविदुषां पौरोहित्यं सुतरां निषिद्धम्। तस्यैतस्यैतदुपसंहारवचनम्— "यो ह वै त्रीन् पुरोहितान् वेद, स ब्राह्मणः पुरोहितः"–इति। एतेन च वचनेन वेदविदा मेव ब्राह्मणानां पौरोहित्यं व्यवस्थापितम्। "अयुव मार्यस्य राष्ट्रं भवति, नैनं पुरायुषः प्राणो जहाति, आजरसं जीवति, सर्व्व मायुरेति, न पुनर्म्रियते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः (८. ५. २.)"–इत्यादिना पुरोहितानां यजमानमङ्गलकारित्वं बहुधैव प्रपञ्चितम्। "तदप्येतदृषिणोक्तम्"–इत्युपक्रम्य सांहितिकमन्त्रत्रयप्रमाणेनाप्येतदेव (ऋ० सं० ४. ५०. ७, ८, ९.) दृढीकृतम् (८. ५. २.)। तत्रैव— "बृहस्पतिर्ह वै देवानां पुरोहितः, त मन्वन्ये मनुष्यराज्ञां पुरोहिताः। बृहस्पतिं यः सुभृतं बिभर्त्तीति यदाह, पुरोहितं यं सुभृतं बिभर्त्तीत्येव तदाह"–इत्यादि द्रष्टव्यम्। बृहस्पतिशब्देनात्र सूर्यो निरुक्तादिप्रसिद्धः। स यथा वाय्वादिदेवानां पुरोहितः पुरःस्थितः, प्राधान्यभागुपकारी च; मनुष्येष्वपि राजपुरोहितास्तथैव भवेयुः; तदत्र संहितावचन मपि प्रमाण मित्याह—"बृहस्पतिं यः सुभृतं बिभर्त्तीति (४. ५०. ७.)। "अग्निर्वा एष वैश्वानरः पञ्चमेनिः"–इत्यादिना (८. ५. १.) पुरोहितानां कोपनत्वं संवर्ण्य, यजमानानां तदुपशमने यत्नस्य कर्त्तव्यता चात्र विहिता। तदेतत्सर्व मालोच्य प्रतीयते, – तदानीन्तनराजपुरोहिताना मसाधारणसम्मानभाक्त्वं,

राजसु राजगृहेषु च प्राबल्यं विशेषशक्तिप्रसारित्वञ्चासीदिति। अपि तेषा मद्यतनपुरोहितानामिव कर्मकारयितृत्वं तत्तत्कर्म्ममन्त्रपाठयितृत्वं च न क्वापीह गम्यते, न वा क्वचिदिह ब्राह्मणस्य पुरोहितापेक्षा श्रूयत इति च सुधीभिरालोच्य मेव॥

कर्म्मकारयितृभ्यो दक्षिणादानस्यातिकर्त्तव्यता चासीत् तदानीमपि। तदाह—"दातव्यैव यज्ञे दक्षिणा भवत्यल्पिकापि"—इति ६.५.८। केनापि हेतुना सा परित्यक्ता चेन्न पुनर्ग्रहणीया, केनापि प्रकारेणागतापि सा आपन्नशत्रुभावाय कस्मैचन प्रदेयेति चेहैव। तथाहि—"न निहृतदक्षिणां प्रतिगृह्णीयात्" —इति, यदि त्वेनां प्रतिगृह्णीयात्, अप्रियायैनां भ्रातृव्याय दद्यात्"—इति च ६.५.८। यशोलिप्साप्यासीत्तदातिप्रबला। तदाह—"यम् ब्राह्मण मनूचानं यशो नर्च्छेदिति ह स्वाहारण्यं परेत्य दर्भस्तम्बानुद्ग्रथ्य दक्षिणतो ब्रह्माण मुपवेश्य चतुर्होतॄन् व्याचक्षीत"—इति ५.४.४। कस्मिंश्चिद् दानादिकर्मणि स्वश्रेष्ठताभिमानस्य पापहेतुत्वञ्चाभिमतं तेषाम्। तत एवैव माम्नातम्—"यो वै भवति, यः श्रेष्ठता मश्नुते स किल्बिषं भवति" —इति १.३.२। 'श्रेष्ठतां प्रयोगपाटवाभिमानम्'—इति सायणः।

आम्नातञ्चेह बहुत्र हस्त्यश्वगवादिधनदानप्रशंसागाथाभिगानम्। तथाहि दौष्यन्तिभरतस्य (८.४.८.)—

"हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्।
मष्णारे भरतोऽददाच्छतं बद्वानि सप्त च"—इत्यादि।

इह श्रुतस्य मृगशब्दस्य हस्तिपरव्याख्यानं सायणीयम्; अस्तु तत् तथैव मन्तव्यम्, परं तत्कृतं बद्वशब्दस्य वृन्दसङ्ख्यापरत्वं तु नास्मभ्यं रोचते; तादृशदानं ह्यत्यधिक मित्यसम्भव मिति।

